निःशेषितधनत्वेपि परिसरमत्यजतो भुजङ्गान् शरद्घनवर्णनव्याजेन निन्दन्ती वेश्यासखी तां प्रति साकूतमाह—

**उअ सिन्धवपव्वअसच्छहाइँ धुअतूलपुञ्जसरिसाइं ।**
**सोहन्ति सुअणु मुक्कोअआइं सरए सिअब्भाइं ॥ ७९ ॥**

[ पश्य सैन्धवपर्वतसदृक्षाणि धुततूलपुञ्जसदृशानि ।
शोभन्ते सुतनु मुक्तोदकानि शरदि सिताभ्राणि ॥ ]

**सैन्धवपर्वततुल्यानि पश्य धुततूलपुञ्जसदृशानि ।**
**मुक्तोदकानि सुतनो शरदि सिताभ्राणि शोभन्ते ॥ ७९ ॥**

पर्वतसादृश्येन—कठोरत्वं जडत्वं च, सैन्धवेत्यनेन द्रुतद्रवशालितया अस्थिरमनस्कत्वं च सूच्यते । तूलसादृश्येन—स्वाभाविकं लाघवम्, धुतेत्यनेन बहुशस्तिरस्कृतत्वं च द्योत्यते । अभ्रपदेन—अत्युच्चैरपि रिक्तैर्मेघैर्यथा न फलसिद्धिस्तथा कौलीन्यादिमहिम्ना उन्नतैरपि निर्धनैर्जनैः किं नः फलमिति सूच्यते । शोभन्त इति साकूतोक्तिः । निःशेषितधना इमे न भान्तीति व्यङ्ग्योर्थः । मुक्तोदकपदेन—समापितधनत्वं तु स्फुटमेव । तथा च सुतनु इत्यामन्त्रणेन—संप्रति नवयौवने स्वाभाविकसौन्दर्यशालिनी त्वं निःशेषितधनतयाऽस्मदादीनामनभिप्रेतेषु भुजङ्गेष्वेतेषु बाह्यसौष्ठवमात्रमालोक्य न प्रसक्ता भविष्यसीति सख्या ध्वन्यते । 'सुअण' इति पाठे तु सुजनेति पथिकसंबुद्धिः । तथा च प्रावृट्परिसमाप्त्या मार्गाणां यात्राक्षमतया साम्प्रतं देशान्तरगमनेन द्रव्यादिकमर्जनीयम्, न निश्चेष्टतया स्थातव्यमिति हितचिन्तकः कश्चित्तं प्रति भङ्ग्या सूचयतीति तात्पर्यार्थः । 'वर्षागमनेन दुःखितां नायिकां शरत्कालोपगमेन स शीघ्रमायास्यतीति समाश्वासयन्ती सखीदमाह' इति गङ्गाधरः ।

त्वां सुखयितुं सततमनुवर्तमानामपि मत्सखीं कुशलप्रश्नादिनाप्यसंभावयन् हन्त हन्त स्वार्थमात्रप्रवणस्त्वं सर्वथा पराङ्मुखोसीति नायकमुपालभमाना नायिकासखी अन्यापदेशविधयाह—

**आउच्छन्ति सिरेहिँ विवलिएहिँ उअ खंडिएहिँ णिज्जन्ता ।**
**णिप्पच्छिमवलिअपलोइएहिँ महिसा कुडङ्गाइं ॥ ८० ॥**

[ आपृच्छन्ति शिरोभिर्विवलितैः पश्य [खड्गिकैः] नीयमानाः ।
निःपश्चिमवलितप्रलोकितैर्महिषाः कुञ्जान् ॥ ]

**पश्य शिरोभिर्वलितैः कौटकिकैर्नीयमाना हि ।**
**आपृच्छन्ते कुञ्जान्निःपश्चिमवलितवीक्षणैर्महिषाः ॥ ८० ॥**

वलितैः पृष्ठतोऽवलोकनार्थं परावर्तितैः शिरोभिः ( उपलक्षिताः ) 'खड्ढि(टि)एहिं' कौटकिकैः पशुहिंसाजीवैः 'खटीक' इति भाषा । नीयमाना महिषा निःपश्चिमानि

---

१ 'खटिएहिं' इति स्यात् ।

अन्तिमानि वलितानि परावर्तितानि च यानि वीक्षणानि अवलोकनानि तैः ( तद्द्वारा ) कुञ्जान् आपृच्छन्ते गमनानुमतिप्रश्नं कुर्वन्तीत्यर्थः । पशुषु निकृष्टा महिषा अपि येषु कुञ्जेषु निर्भरनिदाघमध्याह्ने निबिडच्छायामुपलभ्य सुखमासादितवन्तस्तेपि तेषां कुञ्जानां वियोगवेलायां दुःखमनुभवन्ति । अत एव विषादनीरवं पुनः पुनः परावृत्त्य पश्यन्ति । रसिकंमन्यस्त्वं तु ततोप्यधमोसि, यत्तां निष्करुणमेवमवमन्यसे इति सख्या ध्वन्यते । कौटकिकैर्नीयमाना इत्यनेन—हिंसार्थं बलादाकृष्टाः परवशा अपि ते कृतज्ञतां न व्यस्मार्षुर्भवांस्तु स्वतन्त्रोपि न तां प्रश्नमात्रेणापि संमानितवानिति गूढमुपालभ्यते । 'संकेतस्थानकुञ्जानां महिषसांनिध्येन दुरासदत्वात्खिद्यन्तं नायकं खिद्यन्तीं वा नायिकां प्रोत्साहयन्ती काचिदाह' इत्यवतरणं विधाय—'खडिएहिं' इत्यस्य 'खङ्गिकैः' इति अदत्तकोषतया अस्पष्टेव गङ्गाधरकृता छाया । किन्तु 'खटिएहिं' तत्रोचितः पाठो यस्यार्थः पशुहिंसाजीवी । महिषापगमेन कुञ्जा इदानीं निराबाधसंकेतस्थानतामुपगता इति तत्तात्पर्यम् । आपृच्छन्तीति तच्छायाप्रयोगस्तु 'आङि नुप्रच्छयोः' इत्यनवमर्शनमूलको विच्छाय एव ।

मण्डितास्वखिलासु महिलासु दारिद्र्यकृतेन मण्डनाभावेन विषीदन्तीं काञ्चन सुन्दरीं समाश्वासयन्ती काचिद् ज्ञातिपुरन्ध्री आह—

**पुसउ मुहं ता पुत्ति अ वाहोअरणं विसेसरमणिज्जम् ।**
**मा एअं चिअ मुहमण्डणं त्ति सो काहिइ पुणो वि ॥ ८१ ॥**

[ प्रोञ्छस्व मुखं तत्पुत्रि च (पुत्रिके) बाष्पोपकरणं विशेषरमणीयम् ।
मा इदमेव मुखमण्डनमिति करिष्यसि पुनरपि ॥ ]

**प्रोञ्छायि पुत्रि वदनं विशेषरमणीयमश्रुमण्डनकम् ।**
**इदमेव हि मुखमण्डनमिति मा पुनरपि करिष्यसि प्रसभम् ॥८१॥**

अयि पुत्रि ! अश्रु एव मण्डनं मण्डनोपकरणं यस्य तथात्वेपि विशेषरमणीयं वदनं प्रोञ्छ मार्जय । किंवा, वदनं प्रोञ्छ । सहजसुन्दर्यास्तव अश्रु एव मण्डनं विशेषरमणीयं भवति । परम्, इदमेव मुखमण्डनमिति मत्वा पुनरपि नेदं करिष्यसि, नेतः परं रोदितव्यमित्यर्थः । तथा च—नैसर्गिकसौन्दर्यमण्डनमण्डितायास्तव यत्किञ्चिदपि मण्डनायितं भवति । पश्य, वदनविधुविच्छुरितास्तव बाष्पबिन्दवोपि रामणीयकमेव संपादयन्ति, ततः किंवा फलं मोघेन मण्डनान्तरेणेत्याशयः । पुत्रीत्यनेन—वात्सल्यभाजनतया त्वं हितमुपदिश्यसे न प्रतार्यस इत्यभिव्यज्यते । 'निजदारिद्र्येणाश्रु विमुञ्चन्तीं नायिकां समाश्वासयन्ती दूती आह' इति गङ्गाधरः । दरिद्रेयं मण्डनमिच्छति, तथा च मण्डनादिदाने धनिनां सुखसाध्येति तटस्थं प्रति सूचयन्त्या दूत्या वा उक्तिः । गङ्गाधरच्छायायां प्रोञ्छस्वेत्यात्मनेपदप्रयोगस्तु विचारणीय एव ।

मार्गे कर्दमभयादभिसारे संकुचतोर्नायिकानायकयोः प्रबोधार्थं दूती आह—

**मज्झे पअणुअपङ्कं अवहोवासेसु साणचिक्खिल्लम् ।**
**गामस्स सीससीमन्तअं व रच्छामुहं जाअम् ॥ ८२ ॥**

[ मध्ये प्रतनु[क]पङ्कमुभयोः पार्श्वयोः श्यानकर्दमम् ।
ग्रामस्य शीर्षसीमन्तमिव रथ्यामुखं जातम् ॥ ]

**मध्ये प्रतनुकपङ्कं ह्युभयोः संश्यानकर्दमं तटयोः ।**
**ग्रामस्य शीर्षसीमन्तकमिव रथ्यामुखं जातम् ॥ ८२ ॥**

मध्यभागे प्रतनुकः स्वल्पः पङ्को यस्मिन् । तथा उभयोस्तटयोः ( पार्श्वयोः ) संश्यानकर्दमं शुष्कपङ्कम् । रथ्यामुखं ग्रामस्य शीर्षगतं सीमन्तकमिव भागद्वयविभक्तः केशपाश इव जातम् । रथ्योभयपार्श्वयोः शुष्ककर्दमत्वात् दिवसदृष्टेन मार्गेण रात्रावागन्तव्यमिति दूत्यास्तात्पर्यम् । 'प्रतनु स्वल्पं कं जलं यस्मिन्नेतादृशः पङ्को यत्र तादृशम्' इति गङ्गाधरः ।

चिरविरहोत्तरं प्रेयसीप्राप्तौ दुर्दमा भवति विलम्बजनिता तत्समागमोत्कण्ठेति स्वस्य सहृदयतां सूचयन्नागरिकः सहचरमाह—

**अवरह्णागअजामाउअस्स विउणेइ मोहणुक्कण्ठम् ।**
**वहुआइ घरपलोहरमज्जणपिसुणो वलअसद्दो ॥ ८३ ॥**

[ अपराह्णागतजामातुर्द्विगुणयति मोहनोत्कण्ठाम् ।
वध्वा गृहपश्चाद्भागमज्जनपिशुनो वलयशब्दः ॥ ]

**जामातुर्द्विगुणयतेऽपराह्णसमितस्य मोहनोत्कण्ठाम् ।**
**गृहपृष्ठभागमज्जनपिशुनो वध्वा वलयशब्दः ॥ ८३ ॥**

अपराह्णे समितस्य समागतस्य जामातुः मोहनोत्कण्ठां सुरतोत्कण्ठाम् । गृहस्य पृष्ठभाग एव यन्मज्जनम् अङ्गसंमार्जनं शयनं वा तत्सूचकः । अपराह्णसमितेत्यनेन–दिवसे श्वश्रूप्रभृतिसांनिध्याद्रात्रावेव समागमसौकर्यमिति तावत्कालं प्रतीक्षणेनोत्कण्ठातिशयः पोष्यते । द्विगुणयतीत्यनेन–चिरविरहात्समागमोत्कण्ठा त्वासीदेव परं चिरकालाद्धृदयदेशमधिविष्ठन्त्याः प्रेयस्या मज्जनकालिकविवसनाङ्गभावनया सा भृशमुज्जृम्भत इति ध्वन्यते । गृहपृष्ठभागेत्यनेन–अतिसमीप एव सा विजनगता तिष्ठतीत्युत्कण्ठा संवर्ध्यते । पिशुनेत्यनेन शब्दशक्त्यनुरणनवशात्–कर्णेजपो यथा वैगुण्यसूचनया सह हृदि क्लेशमप्युत्पादयति तथा वलयशब्दोपि यथाकथंचिदवरुद्धोत्कण्ठस्य मानसस्य वेदनां जनयतीति सूच्यते । वलयानां शब्दः सुरतसामयिकं वलयशब्दं नायकहृदि स्मारयति । अतएव मोहनस्यैवोत्कण्ठा द्विगुणीभूतेत्याशयः । 'काचन नायिका पितृगृहे स्थिता क्वचिदासक्ता । तद्भर्तरि समागते व्याकुलचित्तं नायकं समादधती दूत्याह' इति गङ्गाधरावतरणम् । 'दिनसत्त्वे जामाता श्वश्र्वादिसांनिध्येन पश्चाद्गृहे न गमिष्यति । सा तु दिनशेष एव तत्र स्वपिति । त्वया तत्र गन्तव्यं तत्र सा सुलभेति' तत्तात्पर्यम् । जामातुर्मोहनोत्कण्ठाद्विगुणीकरणस्य स्वारस्यं नात्र भाति । द्विगुणीकृतमोहनोत्कण्ठस्य पत्युः पुरस्तादेव तादृशवर्णनमरमणीयं चेति मन्मतिः ।

'त्वं भीरुरसि, अतस्तस्याः पत्युर्वीरताडम्बरं दृष्ट्वा भयाकुलत्वान्न तामभिसरसि' इति सभर्त्सनं कञ्चिदुत्तेजयन्ती दूती अन्यापदेशविधयाह—

**जुज्झचवेडामोडिअजज्जरकण्णस्स जुण्णमल्लस्स ।**
**कच्छाबन्धो च्चिअ भीरुमल्लहिअअं समुक्खणइ ॥ ८४ ॥**

[ युद्धचपेटामोटितजर्जरकर्णस्य जीर्णमल्लस्य ।
कक्षाबन्ध एव भीरुमल्लहृदयं समुत्खनति ॥ ]

**युद्धचपेटामोटितजर्जरकर्णस्य जीर्णमल्लस्य ।**
**कक्षाबन्धनमेव हि समुत्खनति भीरुमल्लहृदयानि ॥ ८४ ॥**

मल्लयुद्धकालिकचपेटाभिः आमोटितौ आमर्दितौ, अत एव नीरक्तसंचारत्वात्पिण्डीकृतप्रायौ कर्णौ यस्य तादृशस्य वृद्धमल्लस्य कक्षाबन्धनमेव मल्लकच्छबन्धनमेव अन्येषां भीरुमल्लानां हृदयानि समुत्खनति विद्रावयति । जर्जरकर्णत्वादिना दृढमल्लतामनुमिन्वन्तः कच्छबन्धनाटोपं दृष्ट्वा 'न जाने अग्रे कीदृग्बलं कौशलं च दर्शयेत्' इति भावयन्तो भीता भवन्तीत्याशयः । परिधानीयस्याधोवस्त्रस्य पृष्ठतो निहिताञ्चलं कक्षा—'परिधानाद्बहिःकक्षा निबद्धा ह्यासुरी भवेत्' इति योगियाज्ञवल्क्यः । हृदयानीति बहुवचनेन—बहवोपि मल्लाभासास्ततोऽतितरा बिभ्यतीति सूच्यते । तथा च जीर्णेत्यनेन—पूर्वं तत्पतिः शूरः समर्थश्चासीत् । संप्रति वार्धक्येन क्षीणशक्तिरत एव वाह्याडम्बरं दृष्ट्वा ततो न भेतव्यम् । वृद्धतया तस्या एव नासौ रोचते । ततश्च तरुणे बलशालिनि च त्वयि बलावलुब्धा साऽवश्यमनुरक्ता भवेत् । अतो भीरुतामपहाय निर्भयं तत्राभियोक्तव्यमिति नायकं प्रति दूत्याभिव्यज्यते । 'आरभटीदर्शनेनैव भीरवः सुतरां पलायन्ते, अतो भीरुता न कर्तव्येति कश्चित्कंचिद्बोधयति' इति गङ्गाधरः ।

सहजसौन्दर्यशालिनी गुणगणमण्डिता च काचिन्मल्लपत्नी प्रियतमापमानितापि न लज्जिता, प्रत्युत प्रसादमेवाप । तां भेदयन्ती दूत्याह—

**आणत्तं तेण तुमं पइणो पहएण पडहसद्देण ।**
**मल्लि ण लज्जसि णच्चसि दोहग्गे पाअडिज्जन्ते ॥ ८५ ॥**

[ आज्ञप्तं तेन त्वां पत्या प्रहतेन पटहशब्देन ।
मल्लि न लज्जसे नृत्यसि दौर्भाग्ये प्रकटीक्रियमाणे ॥ ]

**आज्ञप्तं तेन त्वां पत्या प्रहतेन पटहशब्देन ।**
**दौर्भाग्ये प्रकटीक्रियमाणे नृत्यसि न लज्जसे मल्लि ॥ ८५ ॥**

पत्या भर्त्रा प्रहतेन पटहशब्देन, ताडितस्य पटहस्य शब्देनेत्यर्थः । त्वां प्रति यद् दौर्भाग्यमाज्ञप्तं तस्मिन्दौर्भाग्ये प्रकटीक्रियमाणेपि न लज्जसे प्रत्युत नृत्यसि । डिण्डिमघोषपूर्वकं सर्वत्र तव दौर्भाग्यं तेन प्रसेधितं तथापि त्वं न लज्जस इत्यर्थः । तेनेत्यनेन—पूर्वमपि शतधा कृतापराधत्वेपि येन त्वमेवाऽपमानिता, स हि प्रसिद्धस्ते पतिरिति सूच्यते । अत एव स रक्षामात्रकर्ता पतिरेव न तु प्रियतम इति पतिपदेन ध्वन्यते ।

नृत्यसीत्यनेन—एवमवमानेपि यदितस्ततो विचेष्टसे तत्ते नृत्यमिवेति गूढमाक्षेपो ध्वन्यते। मल्लीत्यामन्त्रणमपि साकूतम्—एवमपमानेपि मल्लपत्नीति ख्यातिं वहन्ती त्वं धन्यासीति। आज्ञप्तमित्यनेन—दौर्भाग्यमपि तेन केवलं न सम्पादितमेव, किं तु तदपि राज्ञेव तुभ्यं सगर्वमाज्ञप्तम् । ततश्च—एवं सततव्यलीककारिणं रूपगुणानभिज्ञमपहाय अन्यत्र किं नानुरज्यसीति दूत्याभिव्यज्यते । 'काचन सहजसुन्दरी प्रियतमापमानितापि न लज्जिता दौर्भाग्यस्य चिरकालानवस्थायित्वेन हर्षितैवेति तां बोधयन्ती सख्याह' इति गङ्गाधरः। एवमपराधेपि त्वं प्रसन्नेति त्वं क्षमावत्यसीति तत्तात्पर्यम्। अथवा—पत्युर्विरक्तापि प्रसन्नेति स्वसौन्दर्यगर्विता सेयं सुखसाध्येति तटस्थं कामुकं प्रति दूत्याः प्रलोभनोक्तिः ।

चाटुशतैर्नानाप्रलोभनैश्च पूर्वं वशीकृतवतीं ततः स्वल्पकाल एव विरोधवशादपवादं प्रचारयन्तीं दूतीं प्रति तिरस्कारं सूचयन्ती काचित्सखीमाह—

**मा वच्चह वीसम्भं इमाणँ बहुचाडुकम्मणिउणाणम् ।**
**णिव्वत्तिअकज्जपरम्मुहाणँ सुणआणँ व खलाणम् ॥ ८६ ॥**

[मा व्रजत विस्रम्भमेषां बहुचाटुकर्मनिपुणानाम् ।
निर्वर्तितकार्यपराङ्मुखानां शुनकानामिव खलानाम् ॥]

**मा विस्रम्भममीषां व्रजत बहुलचाटुकर्मनिपुणानाम् ।**
**पिशुनानां हि शुनामिव निर्वर्तितकार्यविमुखानाम् ॥ ८६ ॥**

निर्वर्तिते कार्ये विमुखानाम् अमीषां खलानां विश्वासं मा व्रजत । 'खलस्य वाङ्माधुर्यमात्रेण विश्वासो न विधेय इति कश्चिदाहेत्यवतरणपूर्विका 'खलस्वभावोक्तिरियम्' इति' गङ्गाधरटीका ।

ग्रामान्तरं गच्छन्तीमपि बहुभिः कामिभिरनुस्रियमाणां काञ्चिदसतीमालोक्य कापि सपरिहासमाह—

**अण्णग्गामपउत्था कड्ढन्ती मण्डलाणँ रिञ्छोलिम् ।**
**अक्खण्डिअसोहग्गा वरिससअं जिअउ मे सुणिआ ॥ ८७ ॥**

[अन्यग्रामप्रस्थिता कर्षयन्ती मण्डलानां पङ्क्तिम् ।
अखण्डितसौभाग्या वर्षशतं जीवतु मे शुनी ॥]

**पङ्क्तिमिह मण्डलानां कर्षन्ती ग्राममन्यमुपयान्ती ।**
**अविखण्डितसौभाग्या वर्षशतं जीवतु शुनी मे ॥ ८७ ॥**

मण्डलानां कुक्कुराणां पङ्क्तिं कर्षन्ती आत्मना सह नयन्ती । एवमेवाक्षुण्णसौभाग्या। चिरं जीवत्विति शुनीसाम्यसूचिता तिरस्कारगर्भा परिहासोक्तिः । रिञ्छोलीति पङ्क्तिवाचको देशी ।

पूर्वमनासक्तापि काचिद्देवरेण चाटुशतैर्नानाप्रलोभनैश्च वशीकृता। ततः स्वल्प एव काले विमुखीभवन्तं तं सकोपोपालम्भमिदमाह—

**सच्चं साहसु देअर तह तह चडुआरएण सुणएण ।**
**णिव्वत्तिअकज्जपरम्मुहत्तणं सिक्खिअं कत्तो ॥ ८८ ॥**

[ सत्यं कथय देवर तथा तथा चाटुकारकेण शुनकेन ।
निर्वर्तितकार्यपराङ्मुखत्वं शिक्षितं कस्मात् ॥ ]

**सत्यमुदीरय देवर तथा तथा चाटुकारकेण शुना ।**
**निर्वर्तितकार्यपराङ्मुखत्वमिह शिक्षितं कस्मात् ॥ ८८ ॥**

तथा तथेति पूर्वकृतनानाविधचाटुप्रकारं प्रति संकेतः । कस्मादित्यनेन–एवंविधः स्वार्थी मम तु प्रश्नविषयीभूत एव, न मया दृष्ट इति निन्दातिशयः सूच्यते । नीचस्य सारमेयस्येव ते तदिदं दुश्चेष्टितमनुचितमिति भावः । 'तथा च त्वत्त एवेदं तेन शिक्षितमिति मत्पराङ्मुखत्वं सर्वथा हेयमिति' भावं गङ्गाधर आह ।

ग्रामोत्थप्रभूतधान्यलाभेपि धनसंग्रहार्थं शरदि जिगमिषन्तं ग्रामणीतनयं प्रवासाद्वारयन्ती तत्पत्नी साकूतमाह—

**णिप्पण्णसस्सरिद्धी सच्छन्दं गाइ पामरो सरए ।**
**दलिअणवसालितण्डुलधवलमिअङ्कासु राईसु ॥ ८९ ॥**

[ निष्पन्नसस्यऋद्धिः स्वच्छन्दं गायति पामरः शरदि ।
दलितनवशालितण्डुलधवलमृगाङ्कासु रात्रिषु ॥ ]

**निष्पन्नसस्यसंपद् गायति शरदीह पामरः स्वैरम् ।**
**दलितनवशालितण्डुलधवलमृगाङ्कासु रजनीषु ॥ ८९ ॥**

निष्पन्ना सस्यसमृद्धिर्यस्य तादृशः पामरः कृषीवलोपि, इह अस्यां शरदि कण्डितनवशालितण्डुलवद् धवलो मृगाङ्को यासु एतादृशीषु रात्रिषु निष्प्रतिबन्धं गायति । उपार्जितनिष्पादितेत्याद्यनुक्त्वा निष्पन्नेत्युक्त्या–दैववशादेव सस्यनिष्पत्तिर्जातेति तस्या अस्थिरत्वं सूच्यते । तथा च–अस्थिरां स्वल्पामपि सस्यसंपत्तिमुपलभ्य अधमः कृषिकारोपि मेदुरमृगाङ्कमरीचिभिर्मनुजमनो भादयन्तीष्वासु शरद्यामिनीषु निखिलां विडम्बनामवधीर्य संमोदमनुभवति । प्रभूतवैभवः परमविदग्धोपि च भवांस्तु विरहवेदनाजनकतया संततमशान्तिकरीं क्लेशबहुलां प्रवासिचर्यामधुनैवावलम्बितुमिच्छतीत्यहो भाग्यवैभवमिति निगूढमभिव्यज्यते । शालीनां परिपाके प्रसन्नचेतसः पामरस्य हृदि तण्डुला एवाहर्निशमावर्तन्त इति स्वाभाविकतया तत्साम्यमेवोपनिबद्धम् । 'तस्य गृहे धान्यादिसमृद्ध्या रात्रौ च तत्पतिर्गायतीत्यनेन तत्पतिसांनिध्येन चन्द्रिकाशोभितत्वेन च रात्रेरद्य सा न सुखसाध्येति काञ्चित्कंचिद्बोधयति' अथवा 'शरत्काले शालीनां पाके हालिकः स्वगृहे तिष्ठति, तदपाके तद्रक्षार्थं स्वयं क्षेत्रादौ तिष्ठतीति हलिकवधूः शरत्कालातिरिक्तकाले सुलभेति कश्चित्कंचिद्बोधयति' इति गङ्गाधरः ।

पङ्काङ्कितपादचिह्नानुमानेन क्षेत्रमिदं शालिगोप्याः संकेतस्थलमासीदिति साधनात्स्वमार्मिकतां ख्यापयन्नागरिकः सहचरमाह—

अलिहिज्जइ पङ्कअले हलालिचलणेण कलमगोवीए ।
केआरसोअरुम्भणतंसट्ठिअ कोमलो चलणो ॥ ९० ॥

[ आलिख्यते पङ्कतले हलालिचलनेन कलमगोप्याः ।
केदारस्रोतोवरोधतिर्यक् ( त्र्यंश ) स्थितः कोमलश्चरणः ॥ ]

अयि केदारस्रोतोवरोधतिर्यक्स्थितः कलमगोप्याः ।
मृदुचरणः पङ्कतले ह्यालिख्यत इह हलालिचलनेन ॥ ९० ॥

अयीति सहचरं प्रति संबोधनम् । केदारस्रोतसा अवरोधनवशात् तिर्यक्स्थितः । क्षेत्रे जलसंचारार्थं निम्नानि जलस्रोतांसि क्रियन्ते । तत्रोन्नतरेखायास्तावदायामाभावात् उन्नतभागे निहितः कलमगोप्याश्चरणो जलस्रोतोवरोधवशात्तिर्यक्स्थित एव भवति । तादृशः कलमगोप्याः पङ्के पूर्वतोङ्कितः कोमलश्चरणः पङ्कतले हलालेः हलरेखायाश्चलनेन कर्षणेन आलिख्यते कृष्यते । पूर्ववत्सरे क्षेत्रगतप्रावृट्पङ्कशोषे शालिगोप्याश्चरणोऽङ्कितः । वर्षान्तरे कर्षणसमये स हि चरणप्रतिबिम्बो नागरेण दृष्टः । तं चरणं दृष्ट्वा 'तदिदं शालिरक्षिकायाः संकेतस्थानम्' इति निजसुहृदं प्रत्युपपादयति । तथा च—एषमोपि क्षेत्रेऽस्मिन् कलमोत्पत्तिमारभ्य तत्पाकपर्यन्तं शालिगोपी पान्थादीनां सुलभा स्यादिति तत्प्राप्त्याशा सहचरं प्रति सूच्यते । 'वर्षाकाले पूर्ववत्सरीयकलमगोपीपदाङ्कितक्षेत्रकर्षणं दृष्ट्वा कश्चित्पान्थ आह' इति गङ्गाधरः । 'तंसट्ठिअ' इत्यस्य 'त्र्यंशस्थितः त्र्यंशेन भागत्रयेण स्थितः, असंपूर्ण इति यावत् ।' इत्यर्थं गङ्गाधर आह । 'यदा पूर्ववत्सरे क्षेत्रमध्यस्थितजलस्य शोष आरब्धस्तदा कलमगोप्याः शालिपाकेन संकेतस्य लाभावरोधेन दुःखोपचये संपूर्णश्चरणो न पङ्कमध्ये प्रतिबिम्बितः' इति तत्तात्पर्यम् । परं 'णिद्दालसपरिघुम्मिरतंसवलन्तद्धतारआलोआ । ( २।४८ )' इत्यादिषु 'तंस' पदस्य तिर्यगर्थं स्वयमेव स्वीकुर्वतस्तस्य 'त्र्यंश' इत्यर्थकल्पनमाकर्षणमात्रमित्यलम् ।

शालिक्षेत्ररक्षिकां वीक्ष्य साभिलाषं निजसुहृदं प्रति शृण्वत्यां तस्यां कोपि सहृदयः सवैदग्ध्यपरिहासमाह—

दिअहे दिअहे सूसइ संकेअअभङ्गवड्ढिआसङ्का ।
आवण्डुरोणअमुही कलमेण समं कलमगोवी ॥ ९१ ॥

[ दिवसे दिवसे शुष्यति संकेतकभङ्गवर्धिताशङ्का ।
आपाण्डुरावनतमुखी कलमेन समं कलमगोपी ॥ ]

दिवसे दिवसे शुष्यति संकेतकभङ्गवर्द्धिताशङ्का ।
आपाण्डुरानतमुखी कलमेन समं कलमगोपी ॥ ९१ ॥

कलमः शाली परिपाकेन पाण्डुः पूर्णतागौरवादानतमुखश्च सन् यथा यथा दिवसे दिवसे शुष्यति, तथा तथा शालिक्षेत्रशोषेण संकेतस्थलापगमचिन्तया आनतमुखी भाविसंभोगविरहशङ्कया पाण्डुर्भवन्ती कलमगोपी प्रतिदिनं शुष्यति । अथवा आपाण्डुरं च आनतं च मुखं यस्याः सेत्यर्थः । संकेतस्थानालाभादप्राप्तसमागमः स मयि मन्दप्रणयः कदाचन न भवेदित्याशङ्काया हेतुः । अथवा संकेतकभङ्गस्य वर्द्धिता आशङ्का

रुस्याः सेत्यर्थः । कलमेन सममिति सहोक्त्या–यदि त्वमेनां वाञ्छसि तर्हि कलमया-कात्पूर्वमेव संभोगसाभिलाषा सेयं सुखसाध्येति साभिलाषं स्वसुहृदं प्रत्यभिव्यज्यते । शालिरक्षिकां प्रति तु–तव पाण्डुमुखतायाः शोषस्य च कारणमवगतं मया । तदेतां चिन्नामपहाय मत्सुहृदमभिलषन्तमनुगृह्णीष्वेति सपरिहासमभिसूच्यते । 'इङ्गितादिभिरप्यनवगम्यः प्रच्छन्नोयं प्रेमप्रकारः' इति सरस्वती कण्ठाभरणम् ।

भक्तहारिणीं दृष्ट्वा विचलितचेतसो हलवाहनासक्तस्य पामरस्य चरितं प्रत्यक्षवीक्षकः कश्चित्सहचरमाह—

**णवकम्मिएण हअपामरेण दट्ठूण पाउहारीओ ।**
**मोत्तवे जोत्तअपग्गहम्मि अवहासिणी मुक्का ॥ ९२ ॥**

**[ नवकर्मिणा पश्य पामरेण दृष्ट्वा भक्तहारिकाम् ।**
**मोक्तव्ये योक्त्रप्रग्रहेऽवहासिनी मुक्ता ॥ ]**

**नवकर्मिपामरेण हि पश्य सपदि भक्तहारिकां वीक्ष्य ।**
**योक्त्रप्रग्रहमात्रे मोच्येऽप्यवहासिनी मुक्ता ॥ ९२ ॥**

नवकर्मिणा अनभ्यस्तहलचालनकर्मणा पामरेण सुन्दरीं भक्तहारिकां ( भोजनानेत्रीम् ) दृष्ट्वा क्षुभितचित्ततया योक्त्रस्य 'जोत' इति ख्यातस्य वृषकण्ठावसक्तस्य चर्मपट्टस्य प्रग्रहमात्रे बन्धनमात्रे मोक्तव्येपि अवहासिनी 'नाथ' इति ख्याता नासारज्जुर्मुक्तेति त्वं पश्य । भोजनार्थं विश्रमिष्यता पामरेण हलधुरावहयोर्वृषयोर्योक्त्रबन्धनमोचनस्थाने भक्तहारिकां प्रति जातव्यासङ्गतया बलीवर्दयोर्नासारज्जुर्मुक्तेति भावः । नवकर्मीति पदेन–अनभ्यस्तकर्मतया हलकर्मणि स्वाभाविकः संभ्रमस्तु पूर्वत एवासीत्, पुनर्भक्तहारिणीहृतचित्ततया जायमानो मोहातिशयो न निरोद्धुं शक्योभवदिति सूच्यते । पाउहारी भक्तहारीति देशी । 'पाणिहारीओ' इति पाठे पानीयहारिकामित्यर्थः । 'योक्त्ररूपे प्रग्रहे मोक्तव्ये अवहासिनी मुक्ता' इति गङ्गाधरः ।

नैशतुहिनभङ्गेन योयं हरितदीर्घो मार्गस्तिलक्षेत्रे वीक्ष्यते स हि सुरतरसिकया कयाचिदभिसारिकया कृत इत्यात्मनो मार्मिकतां प्रथयन् नागरिकः सहचरमाह—

**दट्ठूण हरिअदीहं गोसे णइजूरए हलिओ ।**
**असईरहस्समग्गं तुसारधवले तिलच्छेत्ते ॥ ९३ ॥**

**[ दृष्ट्वा हरितदीर्घं प्रातर्नातिखिद्यते हलिकः ।**
**असतीरहस्यमार्गं तुषारधवले तिलक्षेत्रे ॥ ]**

**दृष्ट्वापि हरितदीर्घं प्रत्यूषे नातिखिद्यते हलिकः ।**
**असतीरहस्यमार्गं तुषारधवले तिलक्षेत्रे ॥ ९३ ॥**

नैशतुषारेण धवलीभूते तिलक्षेत्रे हरितं दीर्घं च । असत्याः रहस्यस्य चौर्यसुरतस्य मार्गं दृष्ट्वापि हालिको नातिखिद्यते । असतीगमनमार्गस्य हरिततया हरिततिलानाम-क्षतत्वमालोक्य निजहानेरभावाद्धलिकस्य नातिखेद इत्यर्थः । ममैव क्षेत्रे सुन्दरी कान्वि-

त्पामरेणोपभुज्यते, सापि सुकृतकार्योचितेऽतिप्रत्यूष एवेति स्वल्पः खेदस्त्वभूदेवेति अतिपदेन सूच्यते । नैशतुषारमार्जनोत्तरं पुनस्तन्मार्गे तुषारस्याऽपातात् प्रत्यूष एव सुरतसंघटनाभूदित्यनुमीयते । सुनिबिडितफल-पत्र-शाखतया उपरित आच्छन्नत्वेपि तले सुमसृणतिलप्रकाण्डमात्रसत्तया निभृतसुरतस्य पूर्णावकाश इति तिलक्षेत्रादिषु संकेतके कामिनीनां सबहुमानप्रसिद्धिरिति कण्ठाभरणादिमतमुक्तमेव पूर्वम् । 'णइजूरए' इत्यस्य स्थाने 'सण्ढाणँ जूरए' इति पाठे 'वृषभान्प्रति खिद्यते' निन्दतीत्यर्थः । हरित-दीर्घं मार्गं दृष्ट्वा—वृषभा एव क्षेत्रे प्रविष्टा इति तत्खेदाभिप्रायः । सोयं वाच्यमर्यादया । वृषभपदेन सुरतवर्षणशीलकामिजनाभिप्राये तु 'उद्रिक्ता दुष्टाः कामिन एव मत्क्षेत्रे निभृतं प्रविश्य रमन्ते' इति ध्वनिमर्यादया तान्प्रति क्रोधोऽभिव्यज्यते ।

परिजृम्भितपञ्चशरप्रभावायां प्रावृषि प्राणप्रियाप्रणयपरवशाः पथिका विप्रकृष्टमपि पन्थानमपरिगणितपथिपीडाः क्षिप्रमेवापक्रामन्तीति प्रवीणः कश्चिन्निजसहचरमाह—

**संकेल्लिओ व्व णिज्जइ खण्डं खण्डं कओ व्व पीओ व्व ।**
**वासागमम्मि मग्गो घरहुत्तसुहेण पहिएण ॥ ९४ ॥**

[ संकोचित इव नीयते खण्डं खण्डं कृत इव पीत इव ।
वर्षागमे मार्गो गृहभविष्यत्सुखेन पथिकेन ॥ ]

**संकोचित इव खण्डं खण्डं कृत इव च पीत इव पन्थाः ।**
**पथिकेन नीयते किल गृहभाविसुखेन नवघनागमने ॥ ९४ ॥**

गृहे भावि भविष्यत्सुखं यस्य ईदृशेन, भावि गृहसुखं स्मरतेत्यर्थः । पथिकेन संकोचित इव संक्षिप्तीकृत इव, खण्डशः करणेनैकदेशीकृत इव, पीत इव उत्कण्ठातिशयात्सहसैव समापित इव, मार्गो नीयते उल्लङ्घ्यते । भवने भाविप्रियतमासमागमसुखस्मरणात्सोत्कण्ठेन पथिकेन सुदीर्घोपि मार्गः संप्रति सत्वरं समाप्यत इति भावः । उत्प्रेक्षात्रयेणोत्तरोत्तरं त्वरातिशयो द्योत्यते । निरवशेषो मार्गः संक्षिप्यत इति संकोचनोत्प्रेक्षणेन सूच्यते । खण्डशःकरणेन मार्गस्यैकदेश एव स्थाप्यते, अवशिष्टो लोप्यत इति प्रत्याय्यते । पीत इवेत्यनेन तु—'तथा सत्वरमुल्लङ्घयति यथा द्रवद्रव्यं कश्चित्सहजमेव गलादधःकरोति' इति भूयांस्त्वरातिशयो व्यज्यते । 'आगामिसुखमुद्दिश्य पथिकेन मार्गक्लेशमगणयित्वा त्वरया गृहं प्रति गम्यत इति नायको यथा दुःखं न प्राप्नोति तथा नायिकया विधातुमुचितमिति' उत्क्षिप्ताक्षरमर्यादं गङ्गाधरव्याख्यानम् ।

परनिन्दयैव नन्दद्भिः खलैर्दुर्वचनविशिखैर्मर्मणि ताड्यमाना काचित्सनिर्वेदं सखीमाह—

**धण्णा बहिरा अन्धा ते च्चिअ जीअन्ति माणुसे लोए ।**
**ण सुणंति पिसुणवअणं खलाणँ ऋद्धिं ण पेक्खन्ति ॥ ९५ ॥**

[ धन्या बधिरा अन्धास्त एव जीवन्ति मानुषे लोके ।
न शृण्वन्ति पिशुनवचनं खलानामृद्धिं न प्रेक्षन्ते ॥ ]

**बधिरान्धाः किल धन्यास्त एव जीवन्ति मानुषे लोके ।**
**शृण्वन्ति न पिशुनवचः पश्यन्ति न ये च खलसमृद्धिमपि ॥९५॥**

बधिराश्च अन्धाश्च । जीवनमत्र सफलजीवनरूपेऽर्थान्तरे संक्रमितम् । तथाच—तेषामेवास्मिँल्लोके जीवनं सफलम्, पदे पदे दुर्जनवचनैर्मर्मस्वभिहन्यमानाया न ममेत्यात्मानं प्रति निर्वेदो ध्वन्यते । मानुषे लोक इत्यनेन—मर्त्यलोके तेषामेव जीवनं प्रशस्तं नान्येषाम्, अन्येषु दिव्यलोकादिषु तु दुर्जनवचनश्रवणानवसरात्सिद्धैव सर्वमभिनन्द्यजीवनतेति युक्त्या दिव्यजनसाम्यं सूच्यते । गुणदर्शनेन आन्ध्यबाधिर्यदोषयोरपि साभिलाषताप्रदर्शनादनुज्ञालंकृतिः—'दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ।' इति पीयूषवर्षः । अनया च—पिशुनजनवचनसूचिसंचयैरनवरतविध्यमानश्रवण—हृदयतया दुर्भरं जीवन्त्या मे जीवनमन्धबधिरादिविकलजनापेक्षयापि गर्हणीयमिति निन्दकान् प्रत्यसूयासहकृतः स्वात्मनि निर्वेदातिशयो ध्वन्यते । 'काचिदुत्तमा दुर्जनस्य कस्यचिदुपचयं पश्यन्ती सखीसंनिधौ परितप्यते ।' इति कुलबालदेवटीका । गङ्गाधरटीका तु गाथापञ्चकहीनैवोपलब्धा ।

निकटनिवासिनि नायके निर्भरनिबद्धप्रणया काचित्प्रेमप्रतिषेधार्थं पुनः पुनः प्रियसखीभिः प्रोच्यमाना ताः प्रति सासूयमाह—

**एह्णिं वारेइ जणो तइआ मूइल्लओ व्व गओ ।**
**जाहे विसं व जाअं सव्वङ्गपहोलिरं पेम्म ॥ ९६ ॥**

**[ इदानीं वारयति जनस्तदा मूलकः कुत्रापि वा गतः ( आसीत् ) ।**
**यदा विषमिव जातं सर्वाङ्गघूर्णितं प्रेम ॥ ]**

**अधुना वारयति जनः कुत्र तदा मूक एषोऽगात् ।**
**विषमिव विषमं हि यदा जातं सर्वाङ्गघूर्णितं प्रेम ॥ ९६ ॥**

'मूइल्लओ मूकः' इति धनपालकृतः 'पाइअलच्छी' कोषः । इदानीं तु जनः प्रेमतो निवारयति, परं तदा मूकः किञ्चिदप्यब्रुवन् एष जनः कुत्र अगात् गतोऽभूत् ? यदा हि दुष्प्रतीकार्यं विषमिव प्रेम सर्वाङ्गघूर्णितं सर्वाङ्गेषु व्याप्तं जातम् । इदानीं निवारणेन किं वा फलमिति भावः । रक्तसंचारेण सह सर्वस्मिन्वपुषि व्याप्ते विषे तत्प्रतीकारो यथा दुःशकस्तथा सर्वाङ्गव्याप्तस्य तत्प्रणयस्य संप्रति निवारणमशक्यमेवेत्याशयः । सर्वाङ्गघूर्णितमित्यनेन—युष्मत्कथानुगमने विवशं मे प्रणयसात्कृतं सर्वाङ्गमिति विवशता व्यज्यते । सखीजनं प्रति 'जनः' इति तटस्थतानिर्देशेन—यः किल प्रियतमेन सह संजातां प्रणयप्रवृत्तिं पुरा प्रेक्षमाणोप्यप्रतिषिध्यन् संप्रति वारयति, मन्मनोवेदनामविजानन् स हि सखीजनोपि निःसंबन्धः सामान्यजन एवेति तं प्रत्यसूया प्रकाश्यते । मूकपदेन—वचनोच्चारणेऽत्यन्तमशक्तता सूच्यते । किञ्च—'तदा मूकः कथं जातः' इत्यसौ लोकोक्तिशैली । 'मूइल्लओ' इत्यस्य 'मूलकः' इति विच्छायां छायां प्रकल्प्य अर्थसंगतौ मूकीभवन् कुलबालदेवस्तूपेक्ष्य एव । 'असदृश्यां कस्यांचिदासक्तः कश्चिदुत्तम एव सख्या वार्यमाणः सासूयं तमेव वदति' इति तदङ्गीकृतमवतरणम् ।

कस्याश्चिदनुरागातिशयं प्रतिपाद्य नायकमुत्कण्ठयन्ती दूती सवैदग्ध्योपालम्भमाह—

**कहँ तंपि तुइ ण णाअं जह सा आसन्दिआणँ बहुआणम् ।**
**काऊण उच्चवचिअं तुह दंसणलेहला पडिआ ॥ ९७ ॥**

[ कथं तदपि त्वया न ज्ञातं यथा सा आसन्दिकानां बहूनाम् ।
कृत्वा उच्चावच्चिकां तव दर्शनलालसा पतिता ॥ ]

**किं ते तदपि न विदितं ह्यासन्दीनां यथा बहूनां सा ।**
**उच्चावच्चिकां कृत्वा तव दर्शनलालसा पतिता ॥ ९७ ॥**

तव दर्शनलालसा सा बहूनाम् आसन्दीनाम् । उच्चावच्चिकाम् एकस्या उपरि एकां विन्यस्य उन्नतामारोहणीं कृत्वा पतिता । किं त्वया तदपि न ज्ञातम्? आस्यतेऽस्यामिति वेत्रासनमासन्दीत्यमरटीका । क्षुद्रखट्वा 'पीठिका' इति मेदिनी । त्वद्दर्शनार्थमुत्तुङ्गे जालवातायने प्राप्तुमप्रभवन्ती सेयं बहुभिः पीठिकाभिर्निःश्रेयणीं विधाय तस्या उच्चावचत्वात्पपात, एतावांस्त्वय्यस्या अनुराग इत्याशयः । उच्चावचपदेन—सापि विषमा, यथावन्न निर्मितेति दर्शननिमित्तेन संभ्रमेणानुरागातिशयः सूच्यते । एवं च—भवदवलोकनोत्सवमत्ता निजनिपातमप्यविगणयन्ती सेयमेवं त्वय्यनुरक्ता । भवांस्तु—तत्प्रमोदनं दूरमास्तां तस्या विपत्तिमपि न परिजानाति, अहो ते प्रणयपरिपाटीति नायकं प्रत्युपालम्भो ध्वन्यते । 'कस्याश्चित्सखी सख्या अनुरागातिशयं नायकविषये सूचयन्ती नायकाग्रे कथयति' इत्यप्रौढमवतरणं कुलबालदेवस्य ।

रममाणं कञ्चिद्विटं श्रावयन्सहृदयः कश्चिन्निजसहचरं प्रति सपरिहासमाह—

**चोराणँ कामुआणँ अ पामरपहिआणँ कुक्कुडो वअइ ।**
**रे रमह वहइ वाहयह एत्थ तणुआअए रअणी ॥ ९८ ॥**

[ चौरान्कामुकांश्च पामरपथिकांश्च कुक्कुटो वदति ।
रे रमत वहत वाहयत अत्र तन्वी भवति रजनी ॥ ]

**चौरान्कामुकलोकान्पामरपथिकांश्च कुक्कुटो वदति ।**
**तन्वी भवति निशेयं वहताऽऽरमताऽत्र वाहयत ॥ ९८ ॥**

तन्वी भवति, स्वल्पाऽवशिष्यत इत्यर्थः । आवश्यकत्वेपि मूले चौरानित्यादीनां वहतेत्यादिभिः सह यथायोगमन्वयः, इह तु यथासंख्यम् । अलंकारश्च सः । चोरितवस्तूनि नयतेति चौरान्, आ ( समन्तात् बाढमिति यावत् ) रमध्वमिति कामुकलोकान्, बलीवर्दान् भारशकटं वाहयतेति मार्गगामिनः पामरान् प्रति, वदतीत्यर्थः । 'रात्रिशेषे कुक्कुटः शब्दं करोतीति कुक्कुटानां स्वाभाविकं रूपम् । तच्छ्रुत्वा तस्य प्रयोजनमुत्प्रेक्ष्य विवृणोति कश्चित्' इत्यप्रौढमिव कुलबालदेवः । रमहेति प्राकृतवत्संस्कृतेपि रमतेत्येव कुलबालकृता छाया तु च्युतसंस्कृतिरेव ।

प्रणयकोपाभिनयाय परस्परमभाषमाणावपि मिथः कटाक्षविनिमय एव युगपद्विहसितवन्तौ 'कृत्रिमकोपतया त्वमेव पूर्वमहसीः' इति च मिथो विवदमानौ नायिकानायकौ वीक्ष्य सखी सखीमाह—

अण्णोण्णकडक्खन्तरपेसिअमेलीणदिट्ठिपसराणम् ।
दो च्चिअ मण्णे कअभण्डणाइँ समहं पहसिआइं ॥ ९९ ॥
[ अन्योन्यकटाक्षान्तरप्रेषितमिलितदृष्टिप्रसरौ ।
द्वावपि मन्ये कृतकलहौ समकं प्रहसितौ ॥ ]
अन्योन्यकटाक्षान्तरसंप्रेषितमिलितदृक्प्रसरौ ।
कृतकलहौ किल मन्ये द्वावपि सहसा समं हसितौ ॥ ९९ ॥

अन्योन्यकटाक्षान्तरे संप्रेषितः मिलितश्च दृक्प्रसरो ययोरीदृशौ कृतकलहौ द्वावपि मन्ये समं युगपत् हसितौ । कोपप्रशमेपि 'अयं पूर्वमनुनयेत्, इयं पूर्वमनुनयेत्' इति केवलं प्रथमानुनयं प्रतीक्षमाणयोरनयोः कोपशान्त्युत्तरमौत्सुक्यस्योदयात्परस्परकटाक्षविनिमये सति समकालमेव हासो जातो न पूर्वपश्चाद्भावेनेति भावः । कटाक्षान्तरे दृष्टिप्रेषणस्यायमाशयो यत् 'प्रशान्तकोपतायामप्यधुना किं व्यवस्यति, अनुनयाय कियान्विलम्बः' इति मिथः परिज्ञानाय द्वावपि परस्परं प्रति मुहुर्दृष्टिं निक्षिपतः । परम् औत्सुक्यं मे न प्रकटीभवेदित्यभिसन्धिना स्पष्टमदृष्ट्वा नेत्रप्रान्तेन निभृतं विलोकयत इति । द्वावपि च परस्परमेवमनुसंधित्सावशान्मिथः कटाक्षेण दृष्टिं निक्षिपतः । अत एव द्वयोर्दृक्प्रसरो मिलति । ततश्च परस्परं मिलितनयनौ द्वावपि परस्परस्य हृदयदशां परिज्ञातवन्ताविति सहसा द्वयोरेव युगपत् हासः समभवदित्याशयः । एवं च—परस्परं नयनयोग एव विहसितवतोर्युवयोः कोपदृढता सम्यगस्माभिः परिज्ञाता ! किं मुधा गोपयथः इति नायकौ प्रति परिहासः सख्या व्यज्यते । 'भण्डण' शब्दः प्राकृते कलहविशेषवाचकः । 'मेलीणदिट्ठिपसराणम्' इत्यस्य 'मिलितदृष्टिप्रसरौ' इति छायाकरणं प्राक्तनटीकानुरोधेन । 'मेलितदृष्टिप्रसरयोः ( अनयोः मध्ये ) कृतकलहौ द्वावपि मन्ये समं प्रहसितौ' इत्येव यद्यर्थोऽभविष्यन्न काचिदर्थक्षतिरित्यलम् ।

नितान्तमनुरक्तामपि नायिकां धीरमानितया यथावदननुवर्तमानं नायकं नायिकाच्छन्दानुवर्तिनं कर्तुं नायिकासखी हरनमस्कारव्यपदेशेन सवैदग्ध्योपालम्भमाह—

संझागहिअजलञ्जलिपडिमासंकन्तगोरिमुहकमलम् ।
अलिअं च्चिअ फुरिओट्ठं विअलिअमन्तं हरं णमह ॥ १०० ॥
[ संध्यागृहीतजलाञ्जलिप्रतिमासंक्रान्तगौरीमुखकमलम् ।
अलीकमेव स्फुरितोष्ठं विगलितमन्त्रं हरं नमत ॥ ]
सन्ध्योपात्तजलाञ्जलिबिम्बितगौरीमुखाम्बुरुहम् ।
स्फुरिताधरं मुधैव हि विगलितमन्त्रं हरं नमत ॥ १०० ॥

सन्ध्योपासनार्थं गृहीते जलाञ्जलौ प्रतिबिम्बितम् [ प्रतिमया प्रतिबिम्बरूपेण संक्रान्तम् ] गौरीमुखकमलं यस्य तम् । अत एव—प्रेयसीमुखावलोकनादुज्जृम्भितभावान्तरजया विगलितो मन्त्रो ( मन्त्रजपः ) यस्य, तथापि प्रमादगोपनाय मुधैव स्फुरिताधरं संचलदोष्ठपुटं हरं प्रणमत । विस्मृतादिस्थाने विगलितपदनिवेशेन—बलादुपस्थापितोपि

मन्त्रः प्रेयसीमुखदर्शनाज्जातभावान्तरतया स्वयं विस्खलतीति भावप्राबल्यं सूच्यते। तथाच—चराचरनायको भगवान्भूतभावनोपि प्रियाप्रेमानुवृत्त्या तन्मुखप्रतिबिम्बमात्रमप्यवलोक्य प्रशमप्रधाने संध्योपासनसमयेपि तद्गतचित्तो भवति, किं वा प्रियां प्रमोदयितुं तादृश इव भवति । त्वं तु रसमयेपि समये सततमनुवर्तमानामपि प्रेयसीं न यथावदनुरञ्जयसि । अहो ते रसिकतेति नायकं प्रत्युपालम्भोभिव्यज्यते । त्वत्प्रेमवशंवदामेनां धीरोपि त्वं सर्वसमयेपि रसिकतयैव सततमनुवर्तस्वेति चरमं व्यङ्ग्यम् । 'समाप्तौ हरनमस्काररूपं मङ्गलमाचरति' इति गङ्गाधरः । 'हरस्यापि गौरीमुखकमलप्रतिबिम्बं दृष्ट्वा सन्ध्यारूपनित्यकर्माङ्गमन्त्रलोपो भवति किं पुनरसदादेर्लोकस्य प्रियासांनिध्ये व्याकुलचित्ततेति सर्वथा स्त्रीसङ्गः परिहरणीयः' इति तात्पर्यार्थकल्पनं तु गङ्गाधरस्य गाथाकारहृदयप्रतिकूलमेव । 'अमिअं पाउअकव्वम्' इति पद्येन स्वारब्धस्य प्राकृतकाव्यस्य कामतत्त्वनिर्भरतां प्रतिज्ञाय उपसंहारे सर्वथा तदुन्मूलनस्य सुस्पष्टं विरुद्धत्वात् । 'सर्वथा स्त्रीसङ्गः परिहरणीयः' इत्यनेन—आलम्बननिरासात् शृङ्गारः सुस्पष्टमुन्मूलित एव । तस्मात् प्रशमानुगुणचित्तेनापि सा शिक्षा ग्रन्थान्तरतोऽवसेया, न गाथासप्तशतीतः । कान्तासंमिततयोपदेशस्तु मध्ये मध्ये स्वयं ग्रन्थकारेणैव सूचित इति ग्रन्थकारोद्देश्यविफलनमनुचितमेवेत्यलमन्ते विरसविवादेन । अनया गाथया पूर्वोक्तध्वनिं स्फुटयन् शिवस्य सायंसन्ध्योपासनवर्णनेन ग्रन्थसमाप्तिमपि सूचयति गाथाकारः । 'पसुवइणो रोसारुणे' त्यादिना प्रातःसन्ध्यावर्णनादारम्भः सूचितः । अन्ते तु तेनैव क्रमेण सायंसन्ध्यावर्णनात्समाप्तिः सूचितेत्यलं मार्मिकेषु ।

उपसंहरति—

**इअ सिरिहालविरइए पाउअकव्वम्मि सत्तसए ।**
**सत्तमसअं समत्तं गाहाणँ सहावरमणिज्जम् ॥ १०१ ॥**

[ इति श्रीहालविरचिते प्राकृतकाव्ये सप्तशते ।
सप्तमशतं समाप्तं गाथानां स्वभावरमणीयम् ॥ ]

**नरपालहालरचिते प्राकृतकाव्येऽत्र सप्तशते ।**
**सप्तमशतं समाप्तं गाथानां वै स्वभावरमणीयम् ॥ १०१॥**

सप्तशते सप्तशतीरूपे प्राकृतकाव्ये । 'हाल इति राज्ञः शालिवाहनस्य संज्ञान्तरम्' इति गङ्गाधरः ।

**गङ्गाधरकृतटीकामनु टीका निर्मिता सेयम् ।**
**अथ लक्षिता त्रुटी काप्यघटीह स्तोकविस्तारः ॥ * ॥**

इति श्रीजयपुरमहाराजाधिराजसंमानिततैलङ्गभट्टान्ववायसंभूत—देवर्षिभट्टश्री-
मथुरानाथशास्त्रिसाहित्याचार्यनिर्मिता संस्कृतगाथासप्तशतीटीका
व्यङ्ग्यसर्वङ्कषा समाप्ता ।

# संस्कृतगाथानिबन्धुः परिचयः ।

तैलङ्गपुङ्गवानामाङ्गिरसायास्यगौतमेतिसत्प्रवरः ।
देवर्ष्यवटङ्कवहो वंशो भूपालपूजितो जयति ॥ १ ॥
तस्मिन्नरिपरिभावी वावीजीदीक्षितात्तृतीयोऽभूत् ।
श्रीमान्मण्डलनामा सम्पत्सौभाग्यभाग्यनिधिः ॥ २ ॥
बान्धवदेशनरेशो गुरवे यस्मै प्रयागकृतधाम्ने ।
ग्रामान्देवर्षिमुखान् शतं व्यतारीत्ससंमानम् ॥ ३ ॥
तस्मिन् वंशे श्रीमान् श्रीकृष्णः कविकलानिधिर्जातः ।
बुधसिंहबुन्दिभर्तुर्निकटाद्योऽनीयताऽम्बरेशेन[1] ॥ ४ ॥
'सुकवि' 'कलानिधि' बिरुदोऽलंकारकलानिधेः कृते प्रददे ।
जयपुरपुरनिर्मात्रा जयसिंहेनाम्बरावनीभर्त्रा ॥ ५ ॥
'वाणी' 'भारति' बिरुदस्तत्तनयो द्वारकानाथः ।
माधवसिंहमहीन्द्रादेष कवीन्द्राधिपो ययौ मानम् ॥ ६ ॥
श्रीमत्पृथ्वीसिंहात्प्रतापभूपाच्च लब्ध'वाणि' बिरुदस्य ।
व्रजभाषामयकविता यस्य सुकवितानवं[3] सूते ॥ ७ ॥
तत्तनयो व्रजपालः प्रतापभूपालमाननीयो यः ।
नवसंगीतग्रन्थं विधाय समियाय भूरिसंमानम् ॥ ८ ॥
तत्तनयानां ज्येष्ठो मण्डनमिव मण्डनो बभूव विदाम् ।
कवितातोषिनरेन्द्रा भूरिगजेन्द्रान्ददुर्यस्मै ॥ ९ ॥
यो राजनीतिकुशलो विपुलोत्साहेषु राजसु प्रसितः ।
जयसिंहभूमिभर्तुर्लेभे ग्रामादिसंमानम् ॥ १० ॥
प्रज्ञाचक्षुर्लक्ष्मणभट्टोभूत्तत्सुतः सुदक्षतमः ।
रामनरेन्द्राद्बुन्दीभर्तुर्योऽविन्दत ग्रामम् ॥ ११ ॥
जनितः श्रीमल्लक्ष्मीनाथसुत-द्वारकानाथैः ।
मथुरानाथः सोयं दत्तकपौत्रोऽभवत्तस्य ॥ १२ ॥
येन हि 'जयपुरवैभव'[4]मथ किल 'साहित्यवैभवं' सृजता ।
'कवितानिकुञ्ज'महिता नवछन्दोबन्धरीतिराकलिता ॥ १३ ॥

---

१ आम्बेराधीशेन श्रीजयसिंहभूपालेन । २ एतन्नामा ग्रन्थो जयसिंहाज्ञया निर्मितः । अयं हि काव्यप्रकाशादिवत् साहित्यस्य व्रजभाषामय आकरग्रन्थः । एतत्परिचयः 'साहित्यवैभवे' द्रष्टव्यः । ३ कविताभिमानिनां सुकवीनां तानवं कृशताम् । ४ 'कवितानिकुञ्जस्य' भागद्वयमिदं बम्बई निर्णयसागरे मुद्रितम् । प्रथमे जयपुरराजवंशवर्णनपूर्वं तद्राज्यस्य सचित्रं वर्णनमन्ये च बहवो विषयाः, द्वितीये कवित्त-सवैयादिहिन्दीछन्दोभिः ऋतु-नवरस-अन्योक्ति-समीक्षा-नीति-उर्दू-प्रभृतिसर्वभाषाच्छन्दो-वर्तमानभारत-विहारिसप्तशतीप्रभृतयो नानाविषयाः सन्ति । 'मथुरानाथशास्त्री रेसिडेन्सीरोड जयपुर' तः प्राप्यमिदं पुस्तकम् ।

जयपुरराज्यस्याखिलसंस्कृतशिक्षानिरीक्षणं दधता ।
मानमहीपच्छायामधिवसता मञ्जुनाथपरनाम्ना ॥ १४ ॥

गगनमुनिनन्दचन्द्रप्रमिते विक्रममहीपतेर्वर्षे ।
सप्तशतीयं कलिता संमिलिता टीकया परतः ॥ १५ ॥

गाथासप्तशतीयं प्राकृतलोकोप[2]भोग्यसौभाग्या ।
अमरगिरा संबन्धात्संस्कृतजनतोपयोगिनी जाता ॥ १६ ॥

निभृतनिषेव्यममृतमयमुपवनमिदमार्यरसिकानाम् ।
नावश्यक[3]प्रवेशाः सभ्याः क्षाम्यन्तु तत्सदयम् ॥ १७ ॥

उपसंहारः

देवर्ष्युपाह्वभट्टश्रीमथुरानाथशर्मनिर्मितिषु ।
सेयं संस्कृतगाथासप्तशती पूर्तिमवतीर्णा ॥ १८ ॥



१ 'सुदरवाइझर संस्कृतपाठशालाजात ज्यपुरस्टेट' । २ प्राकृतभाषानुरागिभिर्भोग्यापि अमरभारतीसङ्गात्संस्कृतभाषिजनताया उपयोगिनी जाता । किञ्च प्राकृतलोकैः साधारणजनैरुपभोग्यापि संस्कृतसंसर्गात्संस्कारसंस्कृतानां नागरिकाणामुपयोगिनी जातेत्यप्यर्थः । संस्कृतस्य अपूर्वोत्कर्षदायकत्वं ध्वन्यते । ३ ये आर्या दर्शन-प्रभृतिगभीरग्रन्थेषु सततं प्रसितास्ते मनोविनोदाय तदिदं निभृतोपवनमासेवन्ते । अत एव अरसिकहृदयतया नवीनसभ्यतानुरोधाद्वा येषामेतत्सप्तशतीगतंध्वर्थेषु न प्रवेशोऽभवत्तेषामेतत्प्रवेशस्यावश्यकतापि न । यतः किल आर्यरसिकानाममृतप्रदत्वेन अत्यन्तमिष्टतमं तदिदं निभृतम् ( Private ) उपवनमस्ति । एवं सति सभ्यतानुरोधात् अप्रवेशनियम-( No admition )-बाध्याः सभ्येतिबिरुदवाहिनस्ते कृपां विधाय क्षमां विधेयासुरित्यर्थः ।

# गाथानुक्रमणिका ।


अइ उज्जुए ण ७।७७
अइकोवणा वि सासू ५।९३
अइ दिअर किं ण ६।७०
अइदीहराइँ बहुए ७।७४
अउलीणो दोमुह ३।५३
अकअण्णुअ घणवण्णं ६।९९
अकअण्णुअ तुज्झ ५।४५
अक्खडइ पिआ (रइराअस्स) १।४४
अगणिअजणाववाअं ५।८४
अगणिअसेस (गैतलज्जिअस्स) १।५७
अग्घाइ छिवइ ७।२९
अज्ञाणं तणुआरअ (मिहरस्स) ४।४८
अच्चासण्णविवाहे ७।५५
अच्छउ ता जणवाओ (वाहवस्स?) ३।१
अच्छउ दाव मणहरं २।६८
अच्छीहिँ ता थइस्सं (नरसीहस्स) ४।१४
अच्छेरं व णिहिं (रामस्स) २।२५
अच्छोडिअवत्थ (गुणड्ढस्स) २।६०
अज्जअ णाहं (मिअङ्कस्स) २।८४
अज्ज कइमो वि (हालस्स) २।१९
अज्जं गओत्ति अज्जं (पवरसेणस्स) ३।८
अज्ज मए गन्तव्वं (सुचरिअस्स) ३।४९
अज्ज मए तेण (कैल्लाणस्स) १।२९
अज्जं पि ताव एक्कं ६।२
अज्जं मोहणसुहिअं (जण्णन्दसारस्स) ४।६०
अज्ज म्हि हासिआ (हालस्स) ३।६४
अज्ज वि बालो (विधिविग्गहस्स) २।१२
अज्ज व्वेअ पउत्थो अज्ज (अमीअस्स) २।९०
अज्ज व्वेअ पउत्थो उज्जा (असरिसस्स) १।५८
अज्ज सहि केण (केसवस्स) ४।८१
अज्जाइ णीलकञ्चुअ (मीणसामिणो) ४।९५
अज्जाएँ णवण (केसवराअस्स) २।५०
अणुऊलं विअ वोत्तुं ६।२२
अणुणअपसा (विण्णस्स) ३।७७
अणुदिअह (परक्कम्मस्स) ३।६६
अणुमरणपत्थिआए ७।३३
अणुवत्तणं (हालस्स) ३।६५
अणुहुत्तो करफंसो ७।५७
अण्णग्गामपउत्था ७।८७
अण्णण्णं कुसुम (अणुराअस्स) २।३९
अण्णमहिला (अणिरुद्धस्स) १।४८
अण्णं पि किं पि ६।९
अण्णह ण तीरइ (अण्णवत्थस्स) ४।४९
अण्णाणँ वि होन्ति ५।७०
अण्णावराहकुविओ ५।८८
अण्णासआइँ (मअरन्दअस्स) १।२३
अण्णेसु पहिअ ७।२९
अण्णो को वि ५।३०
अण्णोण्णकडक्ख ७।९९
अत्ता तह रमणिज्जं (कुमारिलस्स) १।८
अत्थक्करूसणं ७।७५
अद्दंसणेण पुत्तअ (वहुरसस्स) ३।३६
अद्दंसणेण पेम्मं (सामिअस्स) १।८१
अद्दंसणेण महिला (सामिअस्स) १।८२
अद्धच्छिपेच्छिअं (मअरन्दस्स) ३।२५
अन्तो हुत्तं डज्जइ (णाहहत्थिस्स) ४।७३
अन्धअरबोरपत्तं (अणुराअस्स) ३।४०
अपहुप्पन्तं (उअहिस्स)? ५।११
अप्पच्छन्दपहाविर (पवरसेणस्स) ३।२


१. 'गतलज्जस्य' वेबरमुद्रितपुस्तकस्थपाठः. २. 'कल्याणस्य' वे.

अप्पत्तपत्तअं (मउहस्स?) ३।४१
अप्पत्तमण्णुदुक्खो (......) २।५७
अप्पाहेइ मरन्तो ७।३२
अब्भन्तरसरसाओ ७।२३
अमअमअ (हालस्स) १।१६
अमिअं पाउअकव्वं १।२
अम्बवणे भमरउलं ६।४३
अम्हे उज्जुअसीला ७।६४
अलिअपसुत्त (चन्दसामिणो) १।२०
अलिअपसुत्तव ७।४६
अलिहिज्जइ पङ्कअले ७।९०
अवमाणिओ वि (अवन्तिवम्मस्स) ४।२०
अवरज्झसु (माउराअस्स) ४।७६
अवरह्लागअ जामा ७।८३
अवराहेहिं वि (जअराअस्स) ४।५३
अवलम्बह मा (दुद्धरस्स) ४।८६
अवलम्बिअमाण (रेवाए) १।८७
अवहत्थिऊण (देवस्स) २।५८
अविअह्लपेक्खणिज्जेण (वज्जस्स) १।९३
अविइह्लपेच्छणिज्जं ([1]सिरिसत्तिअस्स) १।९९
अविरलपडन्तणव ५।३६
अविहत्तसंधिबन्धं ७।१३
अविहवलक्खणवलअं ६।३९
अव्वो अणुणअ (सीहस्स) ४।६
अव्वो दुक्कर (सरलस्स) ३।७३
असमत्तगुरुअकज्जे ६।३७
असमत्तमण्डणा ([2]कालिराअस्स) १।२१
असरिसचित्ते ([3]मैण्डहिवस्स?) १।५९
अह अह्म आअदो (अहअस्स) ४।१
[4]अहअं लज्जा २।२७
अहअं विओअतणुई ५।८६
अहरमहुपाण ७।६१
अहव गुणव्विअ (चन्दहत्थिस्स) ३।३
अह संभाविअमग्गो (भोजअस्स) १।३२
अह सरसदन्त (अहअस्स) ३।१००
अह सा तहिं तहिं ४।१८
अह सो विलक्खहि (हालस्स) ५।२०
अहिआअमाणिणो (चुह्लोगस्स) १।३८
अहिणवपाउससि ६।५९
अहिलेन्ति सुर (वसन्तस्स) ४।६६
आअण्णाअह्नि ६।९४
आअण्णेइ अउअण्णा (मङ्ग्लस्स) ४।६५
आअम्बन्तकवोलं २।९२
आअम्बलोअणाणं ५।७३
आअरपणामिओट्ठं (वज्जविआरस्स) १।२२
आअस्स किं णु २।८७
आउच्छणविच्छाअं ५।१००
आउच्छन्ति सिरेहिँ ७।८०
आक्खेवआइँ ३।४२
आणत्तं तेण तुमं ७।८५
आम असइ ह्म (पालितस्स) ५।१७
आमजरो मे मन्दो (कालस्स) १।५१
आम बहला वणाली ६।७८
आरम्भन्तस्स धुअं (वल्लहस्स) १।४२
आरुहइ जुण्णअं ६।३४
आलोअन्त दिसाओ ६।४६
आलोअन्ति पुलिन्दा ([5]हॅलिअस्स) २।१६
आवण्णाइँ कुलाइं ५।६७
आसण्णविआहदिणे ५।७९
आसासेइ परिअणं (अलंकारस्स) ३।८३
इअरो जणो ण (वाहवराअस्स) ३।११
इअ सिरिहाल ७।१०१

१. 'मकरन्दस्य' वे. २. 'कलिराजस्य' वे. ३. 'मुग्धदीपस्य' वे. ४. 'शालिवाहनस्य' वे. ५. 'हालिकस्य' वे.

ईसं जणेन्ति (माहवसेणस्स) ४।२७
ईसामच्छररहिएहिँ ६।६
ईसालुओ पई (अरिकेसरिस्स) २।५९
उअअं लहिऊण ५।९०
उअ ओल्लिज्जइ ७।४०
उअगअचउत्थि ७।४४
उअ णिच्चल (वोदिसस्स)[1] १।४
उअ पोम्मराअ १।७५
उअरि हरदिट्ठ (पवरसेणस्स) १।६४
उअ संभमविक्खित्तं ५।६१
उअ सिन्धवपव्वअ ७।७९
उअह तरुकोडराओ ६।६२
उअह पडलन्तरो (पालितस्स)[2] १।६३
उक्खिप्पइ (हालस्स) २।२०
उज्जागरअकसाइअ ५।८२
उज्जुअरए ण तूसइ ५।७६
उज्झसि पिआइ (ईसाणस्स) ३।७५
उट्ठन्तमहारम्भे (मत्तगइन्दस्स) ४।८२
उण्हाइँ णीससन्तो (अणङ्गस्स) १।३३
उद्धच्छो पिअइ (भाङ्कअस्स) २।६१
उप्पण्णत्थे कज्जे (माणइन्दस्स) ३।१४
उप्पहपहाविहजणो ६।३५
उप्पाइअदव्वाणं (पालितस्स) ३।४८
उप्पेक्खागअ (विस[म]सेणस्स) ४।३९
उप्फुल्लिआइ (वच्छस्स) २।९६
उम्मूलेन्ति व (विजयगइ[णो]) २।४६
उल्लावन्तेण ण होइ ६।३६
उल्लावो मा दिज्जउ ६।१४
उव्वहइ णवतण ६।७७
एएण च्चिअ (कङ्किल्लस्स) ५।४
एक्कक्कमपणिरक्खण ७।१
एक्कक्कमसंदेसा (......) ४।४२
एक्क च्चिअ रूअगुणं ६।९२
एक्कं पहरुव्विण्णं (पहईए)[3] १।८६
एक्कल्लमओ दिट्ठीअ ७।१८
एक्केक्कभवइवेठण (अरिकेसरिणो) ३।२०
एक्केण वि वडवी ७।७०
एक्को पह्नुअइ थणो (हालस्स) ५।९
एक्को वि कालसारो (कालसारस्स) १।२५
एण्हिं वारेइ जणो (सिरिसुन्दरस्स) ७।९६
एत्ताइच्चिअ मोहं (भोजअस्स) ५।१०
एत्थ चउत्थं विरमइ ४।१०१
एत्थ णिमज्जइ ७।६७
एत्थ मए रमिअव्वं (गुणमन्दिअस्स) ४।५८
एद्दहमेत्तम्मि जए (सिरिराअस्स) ४।३
एद्दहमेत्ते गामे ६।५३
एसो मामि जुवाणो (मन्दसुअणस्स) ३।९४
एह इमीअ णिअच्छह ६।७९
एहइ सो वि पउत्थो (सिरिधम्मअस्स) १।१७
एहि त्ति वाहरन्तम्मि ६।३
एहिसि तुमं त्ति (अल्लस्स) ४।८५
ओसरइ धुणइ साहं ६।३१
ओसहिअजणो (मन्दरस्स) ४।४६
ओ हिअअ ओहि ५।३७
ओ हिअअ मडह (महाएवस्स) २।५
ओहिदिअहागमा (पुण्णभोजअस्स) ३।६
कण्डन्तेण अकण्डं ७।६३
कण्डुज्जुआ (कअलीहरस्स) ४।५२
कत्थ गअं रइबिम्बं ५।३५
कं तुङ्गथणु (पालितस्स) ३।५६
कमलं मुअन्त ७।४१
कमलाअरा ण (मिअङ्कस्स) २।१०
करमरि कीस ण ६।२७
करिमरि अआल (मअरन्दस्स) १।५५

१ 'वोदितस्य' वे. २. 'पालितस्य' वे. ३. 'प्रहतायाः' वे.

कुरुणाहो व्विअ ५।४३
कलहन्तरे वि (हालस्स) ४।२१
कल्लं किर खर (निप्पैटस्स) १।४६
कस्स करो बहु ६।७५
कस्स भरिसि त्ति (सुरहिवच्छस्स) ४।८९
कहँ णाम तीअ (सवरसत्तिस्स)? ३।६८
कहँ मे परिणइआले ६।६८
कहँ सा णिव्व (पव्वअकुमारस्स) ३।७१
कहँ सा सोहग्गगुणं ५।५२
कहँ सो ण (सङ्करस्य) ५।१३
कहँ तंपि तुइ ण (सेहणाअस्स) ७।९७
कारिममाणन्दवडं ५।५७
किं किं दे (गअसिंहस्स) १।१५
किं ण भणिओ सि (वहुराहस्स) ४।७०
किं दाव कआ (रेवाए) १।९०
किं भणह मं सहीओ ७।१७
किं रुअसि (महिन्दस्स) १।९
किं रुवसि किं अ ६।१६
कीरन्ती व्विअ (सरलस्स) ३।७२
कीरमुहसच्छ (सूरणस्स) ४।८
कुसुममआ वि (हालस्स) ४।२६
के उव्वरिआ के ५।७४
केण मणे भग्ग (मिअङ्कस्स) २।११
केत्तिअमेत्तं होहिइ ६।८१
केलीअ वि रूसे (पावच्छीलस्स) २।९५
केसररअ ४।८७
कैअवरहिअं (रामस्स) २।२४
कोत्थ जअम्मि (विलासस्स) ४।६४
कोसम्बकिसल (गजस्स) १।१९
खणभङ्गुरेण पेम्मेण ५।२३
खणमेत्तं पि ण (हालस्स) २।८३
[2]खन्धग्गिणा १।७७
खरपवणरअगल ६।८३
खरसिप्पिर (पसण्णस्स) ४।३०
खाणेण अ पाणेण ७।६२
खिण्णस्स उरे (अवन्तिवम्मस्स) ३।९९
खिप्पइ हारो ५।२९
खेमं कन्तो खेमं ५।९९
गअकलहकुम्भ (कइराअस्स) ३।५८
गअगण्डत्थल (गन्धराअस्स) २।२१
गअवहुवेहव्वअरो ७।३०
गज्ज महं च्चिअ ६।६६
गन्धं अग्घाअन्तअ ६।६५
गन्धेण अप्पणो (विअहस्स) ३।८१
गम्मिहिसि तस्स ७।७
गरुअछुहाउलि ४।८३
गहवइ गओ (विअड्डइन्दस्स) ३।९७
गहवइणा (सच्चसामिणो) २।७२
गहवइसुओ (हालस्स) ४।५९
गामङ्गणणिअडि ६।५६
गामणिघरम्मि अत्ता ५।६९
गामणिणो सव्वासु ५।४९
गामतरुणिओ ६।४५
गामवडस्स (खण्डस्स) ३।९५
गिज्जन्ते मङ्गल ७।४२
गिह्मे दवग्गि (वेंद्धावहीए?) १।७०
गिरसोत्तो त्ति ६।५१
गेअच्छलेण (अहअस्स) ४।३४
गेह्णह पलोअह (हरितउस्स) २।१००
गेहं व वित्तरहिअं ७।९
गोतक्खलणं सोऊण ५।९६
गोलाअडट्ठिअं (अँविअकणस्स) १।७


१. 'लम्पस्य' वे. २. 'विनयायितस्य' वे. ३. 'अनुरागस्य' वे.. ४ 'अलिकस्य' वे.

| | | |
|---|---|---|
| गोलाणइए | (णरवाहणस्स) | २।७१ |
| गोलाविसमो | | २।९३ |
| घरिणिघणत्थण | (दुव्विड्ढअस्स) | ३।६१ |
| घरिणीए | (हालस्स) | १।१३ |
| घेत्तूण चुण्ण | (कान्तफरस्स)? | ४।१२ |
| चञ्चुपुडाहअवि | | ७।६६ |
| चत्तरघरिणी | (मेहिलस्स[1]) | १।३६ |
| चन्दमुहि | (गग्गराअस्स) | ३।५२ |
| चन्दसरिसं | (वाहवराअस्स) | ३।१३ |
| चलणोआसणि | (भमरस्स) | २।८ |
| चावो सहावसरलं | | ५।२४ |
| चिक्खिल्लखुत्त | (चुल्लोहस्स) | ४।२४ |
| चिन्ताणिअदइ | (वेण्डहिवस्स[2]?) | १।६० |
| चिरंडि पि अ | (पावच्छीलस्स) | २।९१ |
| चोराणँ कामुआणँ | | ७।९८ |
| चोरा सभअसतण्हं | | ६।७६ |
| चोरिअरअसद्धालुइ | (बम्हअन्तस्स) | ५।१५ |
| छज्जइ पहुस्स | (सुन्दरस्स) | ३।४३ |
| छिज्जन्तेहिं | (माणिक्कराअस्स) | ४।४७ |
| जइ कोत्तिओ | | ७।७२ |
| जइ चिक्खल्ल | (चुदुराअस्स[3]?) | १।६७ |
| जइ जूरइ जूरउ | | ७।८ |
| जइ ण छिवसि | | ५।८१ |
| जइ भमसि भमसु | | ५।४७ |
| जइ लोकणिन्दिअं | | ५।८० |
| जइ सो ण वल्लहो | (सुसीलस्स) | ४।४३ |
| जइ होसि ण | (मुहराअस्स) | १।६५ |
| जं जं आलिहइ | | ७।५६ |
| जं जं करेसि जं जं | (कल्लणसीहस्स) | ४।७८ |
| जं जं ते ण सुहाअइ | | ७।१५ |
| जं जं पिहुलं | (कुलउत्तस्स) | ४।९ |
| जं जं पुलएमि दिसं | | ६।३० |
| जं जं सो णिज्झा | (वसन्तअस्स[4]) | १।७३ |
| जं तणुआअइ सा | | ७।११ |
| जन्तिअ गुलं | | ६।५४ |
| जं तुज्झ सई | (अणुलच्छीए) | ३।२८ |
| जम्मन्तरे वि चलणं | | ५।४१ |
| जस्स जहं विअ | (अद्धराअस्स) | ३।३४ |
| जह चिन्तेइ परि | | ७।२८ |
| जह जह उव्वहइ | (......) | ३।९२ |
| जह जह जरा | (पोट्टिसस्स) | ३।९३ |
| जह जह वाएइ | (ससिप्पहाए) | ४।४ |
| जाएज्ज वणुद्देसे | (असमसाहस्स) | ३।३० |
| जाओ सो वि | (चन्दस्स) | ४।५१ |
| जाणइ जाणावेउं | (गामउज्जरस्स[5]) | १।८८ |
| जाणि वअणाणि | | ७।४९ |
| जारमसाणसमुब्भव | (हालस्स) | ५।८ |
| जाव ण कोसवि | | ५।४४ |
| जिविअं असासअं | (हालस्स) | ३।४७ |
| जिविअसेसाइ | (अवज्ञाङ्गस्स) | २।४९ |
| जीहाइ कुणन्ति | | ६।४१ |
| जुज्झचवेडामोडि | | ७।८४ |
| जे जे गुणिणो | | ७।७१ |
| जेण विणा | (रोहाएँ) | २।६३ |
| जे णीलभमर | | ५।२२ |
| जेत्तिअमेत्तं | (मुद्धसीलस्स) | १।७१ |
| जेत्तिअमेत्ता | (पालितस्स) | ४।९३ |
| जे समुहागअ | (वाहवराअस्स) | ३।१० |
| जो कह वि | (वलाइच्चस्स[6]) | २।४४ |
| जो जस्स विहव | (वाहवराअस्स) | ३।१२ |
| जो तीए अहर | (दामोअरस्स) | २।६ |
| जो वि ण आणइ | | ५।३८ |


१. 'मल्लोकस्य' वे. २. 'मुग्धदीपस्य' वे. ३. 'धीरस्य' वे. ४. 'वसलकस्य' वे. ५. 'ग्रामकूटस्य' वे. ६. 'वलदीपितस्य' वे.

झो सीसम्मि ४।७२
झञ्झावाउत्तिणिअघर (जअसेणस्स) २।७०
झञ्झावाउत्तणिए (राअहत्थिणो) ४।१५
ठाणब्भट्ठा परि ७।५२
डज्झसि डज्झसु (हालस्स) ५।१
ण अ दिट्ठिं णेइ ७।४५
णअणब्भन्तर (हालस्स) ४।७१
णइऊरस ([1]पवणराअस्स) १।४५
ण कुणन्तो च्चिअ (अद्धराअस्स) १।२६
णक्खक्खुडिअं (महाराअस्स) ४।३१
ण गुणेण (समरिणस्स) ४।१०
णच्चणसलाहणणि ([2]गुंवरस्स?) २।१४
ण छिवइ हत्थेण ६।३२
णन्दन्तु सुरअसुह (हालस्स) २।५६
ण मुअन्ति (हालस्स) २।४७
णलणीसु भमसि ७।१९
णवकम्मिएण ७।९२
णवपल्लवं विसण्णा ६।८५
णवलअपहरं ([3]प्पणामस्स) १।२८
णववहुपेम्म (कण्णउत्तस्स) २।२२
ण विणा सब्भावेण (भोजअस्स) ३।८६
ण वि तह अइ गरुएण ५।८३
ण वि तह अणालवन्ती ६।६४
ण वि तह छेअ (अणुलच्छीए) ३।७४
ण वि तह पढम (भाणुसत्तिणो) ३।९
णँ वि तह विएस १।७६
ण्हासं व सा कवोले ([4]सामिअस्स) १।९६
ण्हाइं दूई ण (असुलद्धीए)? २।७८
णिअअणुमाण (केलासस्स) ४।४५
णिअघणिअं ६।८२
णिअवक्खारोवि ५।४३
णिक्कण्ड दुरारोहं ५।६८
णिक्कम्माहिं (पुण्डरीअस्स) २।६९
णिक्किव जाआ ([6]हरिआलस्स) १।३०
णिद्दं लहन्ति कहिअं (देवएवस्स) ५।१८
णिद्दाभङ्गो (हालस्स) ४।७४
णिद्दालस (हालस्स) २।४८
णिप्पच्छिमाइं (सिरिवलस्स) २।४
णिप्पण्णसस्सरि ७।८९
णिव्वुत्तरआ (सद्दुणकलसस्स) २।५५
णिहुअणसिप्पं ६।८९
णीआइँ अज्ज (धणंजअस्स) ४।२८
णीलपडपाउअङ्गी ६।२०
णीसासुक्कम्पिअ (रोलएवस्स) ४।६१
णूणं हिअअ (महाएवस्स) ४।३७
णूमेन्ति जे पहुत्तं ([7]माधवीए) १।९१
णेउरकोडि (अणङ्गस्स) २।८८
णोहलिअमप्पणो (मअरन्दसेनस्स) १।६
तइआ कअग्घ (माअङ्गस्स) १।९२
तइ बोलन्ते (हालस्स) ३।२३
तइ सुहअ (मणोरहस्स) ४।३८
तडविणिहिअग्ग (हालस्स) ४।९१
तडसंठिअ (माणस्स) २।२
तणुएण वि (आउलस्स) ४।६२
तं णमह जस्स ([8]णिक्कलङ्कस्स) २।५१
तत्तो च्चिअ होन्ति ७।४८
तं मित्तं काअव्वं (पालितस्स) ३।१७
तम्मिरपसरिअहु ६।८८
तस्स अ सोहग्ग (मअरद्धअस्स) ३।३१
तस्स कहाकण्टइए ७।५९

---

१. 'प्रवरराजस्य' वे. २. 'बुरस्य(?)' वे. ३. 'प्राणामस्य' वे. ४. 'भीमविक्रमस्य' वे. ५. 'स्थिरसाहसस्य' वे. ६. 'शालिकस्य' वे. ७. 'गजरेवस्य' वे. ८. 'कलङ्कस्य' वे.

तह तस्स माण (हालस्स) ५।३१
तह तेणवि सा ७।२५
तह परिमलिआ ७।३७
तह माणो (सालिअस्स) २।२९
तह सोण्हाइ (सुन्दअस्स) ३।५४
ता किं करेउ (बम्हआरिणो) ३।२१
ता मज्झिमो च्चिअ (हालस्स) ३।२४
ता रुण्णं जा (वेरसत्तिस्स) २।४१
तालूरभमा (अवटङ्कस्स) १।३७
तावच्चिअ रइ (कुल्लोहस्स)[1] १।५
तावमवणेइ (हरिउद्धस्स) ३।८८
ताविज्जन्ति (पवाराअस्स) १।७
ता सुहअ विलम्ब ७।२
तीअ मुहाहिं (हालस्स) २।७९
तुङ्गाणं विसेस ५।२७
तुङ्गो च्चिअ (माउराअस्स) ३।८४
तुज्झङ्गराअ २।८९
तुज्झ वसइ (मुद्दस्स)[2] १।४०
तुप्पाणणा (अलक्कस्स) ३।८९
तुह दंसणेण जणिओ ७।१०
तुह दंसणे सअह्ल ६।५
तुह मुहसारिच्छं (राहहत्थिणो) ३।७
तुह विरहुज्जागरओ ५।८७
तुह विरहे (अणङ्गस्स) १।३४
ते अ जुआणा ता ६।१७
तेण ण मरामि ४।७५
ते विरला सप्पु (ईन्दस्स) २।१३
ते वोलिआ (निरुवमस्स) ३।३२
थणजहणणिअ (सव्वसेणस्स) ३।३३
थोअं पि ण (सुरभिवंसस्स)[3] १।४९
थोरंसुएहिं रुण्णं ६।२८
दइअकरग्गहलुलिओ ६।४४
दक्खिणणेण वि (आइवराहस्स) १।८५
दट्ठूण उण्णमन्ते ६।३८
दट्ठूण तरुणसुरअं ६।४७
दट्ठूण रुन्दतुण्ड (विग्गहस्स) ५।२
दट्ठूण हरिअदीहं ७।९३
दढरोस (अवन्तिवम्मस्स) ४।१९
दरफुडिअ (बम्हराअस्स) १।६२
दरवेविरोरुजुअलासु ७।१४
दिअरस्स (हालस्स) १।३५
दिअहं खुडक्किआ (विच्छमस्स) ३।२६
दिअहे दिअहे ७।९१
दिट्ठा चूआ (कोन्तक्खुरस्स)[4] १।९७
दिढमण्णु (मोत्ताहलस्स)[5] १।७४
दिढमूलबन्ध (अणुलच्छीए) ३।७६
दीसइ ण चूअ ६।४२
दीसन्तो णअणसुहो (राअरसिअस्स) ५।२१
दीसन्तो दिट्ठिसुहो ७।५१
दीससि पिआणि ५।८९
दीहुण्हपउर २।८५
दुक्खं देन्तो (सिरिसत्तिअस्स) १।१००
दुक्खेहिँ लम्भइ ४।५
दुग्गअकुटुम्ब (सिरिधम्मअस्स) १।१८
दुग्गअघरम्मि ५।७२
दुण्णिक्खेवअ (साहिल्लस्स) २।५४
दुम्मेन्ति देन्ति (वसन्तवम्मस्स) ४।२५
दुस्सिक्खिअरअ ७।२७
दूइ तुमं चिअ (आहवसत्तिणो) २।८१
दूरन्तरिए वि पिए ७।५८
देव्वम्मि पराहुत्ते (अन्धस्स) ३।४५
देव्वाअत्तम्मि (जीवएवस्स) ३।७९

१. 'त्रिलोकस्य' वे. २. 'मुद्रस्य' वे. ३. 'सुरभिवत्सलस्य' वे. ४. 'स्थिरसाहसस्य' वे. ५ 'पउलिन्यस्य' वे.

| | | |
|---|---|---|
| दे सुअणु पसिअ | | ५।६६ |
| दोअङ्गुलअकवाल | | ७।२० |
| धण्णा ता महि | (मलअसेहरस्स) | ४।९७ |
| धण्णा बहिरा | | ७।९५ |
| धण्णा वसन्ति | | ७।३५ |
| धरिओ धरिओ | (माणस्स) | २।१ |
| धवलो जिअइ | | ७।३८ |
| धवलो सि जइ | | ७।६५ |
| धाराधुव्वन्तमुहा | | ६।६३ |
| धावइ पुरओ पासेसु | | ५।५६ |
| धावइ विअलिअ | (माऊराअस्स) | ३।९१ |
| धीरावलम्बिरीअ | (वाहवस्स) | ४।६७ |
| धुअइ व्व | (विसमराअस्स) | ३।८० |
| धूलिमइलो वि | | ६।२६ |
| पइपुरओ च्चिअ | (मल्लसेणस्स) | ३।३७ |
| पउरजुवणो | (हालस्स) | २।९७ |
| पङ्कमइलेण छीरेक्क | | ६।६७ |
| पच्चग्गप्फुल्ल | | ६।९० |
| पच्चूसमऊहावलि | | ७।४ |
| पच्चूसागअ रञ्जित | | ७।५३ |
| पञ्जरसारिं अत्ता ण | | ६।५२ |
| पडिवक्खं | (उद्धवस्स) | ३।६० |
| पढमं वामणविहिणा | | ५।२५ |
| पढमणिलीणमहुर | | ५।९५ |
| पणअकुविआणँ | (कुमारस्स) | १।२७ |
| पत्तणिअम्बप्फंसा | | ६।५५ |
| पत्तिअ ण पत्तिअन्ती | (पवरसेणस्स) | ३।१६ |
| पत्तो छणो ण | (कालइवस्स)[1] | १।६८ |
| पप्फुल्लघणकलम्बा | | ७।३६ |
| परिओसवि | (जीअएवस्स) | ४।४१ |
| परिओससुन्दराई | | ७।६८ |
| परिमलणसुहा | | ५।२८ |
| परिरद्धकणअ | | ४।९८ |
| परिहूएण | (विक्कमराअस्स) | २।३४ |
| पसिअ पिए | (कुविन्दस्स) | ४।८४ |
| पसुवइणो | (हालस्स) | १।१ |
| पहरवणमग्ग | (अङ्गराअस्स) | १।३१ |
| पहिअवहू विवरन्तर | | ६।४० |
| पहिउल्लूरण | (अइराअस्स) | २।६६ |
| पाअडिअं सोहग्गं | | ५।६० |
| पाअडिअणेह | (मणिराअस्स) | २।९९ |
| पाअपडणाणँ मुद्धे | | ५।६५ |
| पाअपडिअं | (हालस्स) | ४।९० |
| पाअपडिअस्स | (दुग्गसामिणो)[2] | १।११ |
| पाअपडिओ ण | | ५।३२ |
| पाणउडीअ वि | (हालस्स) | ३।२७ |
| पाणिग्गहणे | (अणुराअस्स) | १।६९ |
| पासासङ्की | (भोजअस्स) | ३।५ |
| पिअदंसण | (वसन्तसेणस्स) | ४।२३ |
| पिअसंभरण | (वम्हआरिणो) | ३।२२ |
| पिअविरहो | (वेसुआरिणो)[3] | १।२४ |
| पिज्जइ कण्णञ्ज | | ७।७६ |
| पिसुणेन्ति कामिणीणं | | ६।५८ |
| पुच्छिज्जन्ती ण | | ७।४७ |
| पुट्ठिं पुससु | (पण्डिणो) | ४।१३ |
| पुणरुत्तकरप्फालण | | ६।४८ |
| पुसइ खणं धुवइ | | ५।३३ |
| पुसउ मुहं ता | | ७।८१ |
| पुसिआ अण्णा | (कलसगन्धस्स) | ४।२ |
| पेच्छइ अलद्ध | (विअड्डइन्दस्स) | ३।९६ |
| पेच्छन्ति अणिमिस | (सुरहिवच्छस्स) | ४।८८ |
| पेम्मस्स विरो | (वम्महस्स)[4] | १।५३ |


१. 'कालाधिपस्य' वे. २. 'सिरिराअस्य' वे. ३. 'ब्रह्मचारिणः' वे. ४. 'मन्मथस्य' वे.

पोट्टपडिएहिं (कैअञ्ञसीलस्स) १।८३
पोट्टं भरन्ति (अलक्कस्स) ३।८५
फग्गुच्छण (सूरस्स) ४।६९
फलसंपत्तीअ (कुवलअस्स) ३।८२
फलहीवाहण (कहिलस्स) २।६५
फालेइ अच्छभल्लं (कालसीहस्स) २।९
फुट्टन्तेण वि (राअवग्गस्स) ३।४
फुरिए वामच्छि (सत्तिहत्थिस्स) २।३७
बलिणो बाआबन्धे (भोजअस्स) ५।६
बहलतमा (अहअस्स) ४।३५
बहुआइ णइ (अद्धराअस्स) ३।१८
बहुपुप्फभरोणा (माणस्स) २।३
बहुवल्लहस्स (अल[अ]स्स) १।७२
बहुविहविलासरसिए ५।७७
बहुसो वि (सुरहिवंसस्स) २।९८
बालअ तुमाइ दिण्णं (तुङ्गअस्स) ५।१९
बालअ तुमाहि (हालस्स) ३।१५
बालअ दे वच्च लहुं ६।८७
भग्गपिअसंगमं ५।९१
भञ्जन्तस्स वि (हालस्स) २।६७
भण को ण (महोहिअस्स) ४।१००
भण्डन्तीअ (अत्थस्स?) ४।७९
भमइ पलित्तइ जूरइ ५।५४
भम धम्मिअ (......) २।७५
भरणमिअणील ७।६०
भरिउच्चरन्त (विसेसरसीहस्स) ४।७७
भरिमो से गहिआहर १।७८
भरिमो से सअण (उच्छेउस्स) ४।६८
भिच्छाअरो (ससिराअस्स) २।६२
भुञ्जसु जं साहीणं (त्तिलोअणस्स) ४।१६
भोइणिदिण्णपहेण ७।३
मअणग्गिणो व्व ६।७२
मग्गं च्चिअ ७।६९
मज्झह्लपत्थिअस्स (मङ्गलकलसस्स) ४।९९
मज्झे पअणुअ ७।८२
मज्झो पिओ ६।९७
मण्णे आअण्णन्ता ७।४३
मण्णे आसाओ च्चिअ ६।९३
मन्दं पि ण आणइ ६।१००
मरगअसूई (पालितस्स) ४।९४
मसिणं चङ्कम्मन्ती ५।६३
महमहइ मलअवाओ ५।९७
महिलाणं च्चिअ ६।८६
महिलासहस्स (हालस्स) २।८२
महिसक्खन्धवि ६।६०
महुमच्छिआइ ७।३४
महुमासमारुआ (सालिअस्स) २।२८
मा कुण पडिवक्ख (माअङ्गस्स) २।५२
मा जूर पिआ (अल्लस्स) ४।५४
माणदुमपरुस ४।४४
माणुम्मत्ताइ मए ६।२२
माणोसहं व (वाहवस्स) ३।७०
मामि सरसक्खराणँ ५।५०
मामि हिअअं (वोलएवस्स?) ३।४६
मारेसि कं ण मुद्धे ६।४
मालइकुसुमाइँ ५।२६
मालारीए वेल्लहल ६।९८
मालारी ललिउ ६।९६
मा वच्च पुःफ (णन्दणस्स) ४।५५
मा वच्चह वीसम्भं ७।८६
मासपसूअं (कइराअस्स) ३।५९
मुद्धे अपत्तिअन्ती ७।७८
मुहपुण्डरीअच्छाआइ ७।२४
मुहपेच्छओ पई ५।९८

१. 'कृतज्ञशीलस्य' वे.

मुहमारुएण (पोट्टिसस्स)[1] १।८९
मुहविज्झवि (वज्जएवस्स) ४।३३
मेहमहिसस्स ६।८४
रइकेलिहिअणि ५।५५
रइविरमलज्जिआओ ५।५९
रक्खेइ पुत्तअं ७।२१
रण्णाउ तणं (अवणाअरस्स) ३।८७
रत्थापइण्ण (हालस्स) २।४०
रन्धणकम्मणि (भीमसामिणो) १।१४
रमिऊण पअं (मकरन्दस्स) १।९८
रसिअजण (हालस्स) १।१०१
रसिअजण (हालस्स) २।१०१
रसिअजण (हालस्स) ३।१०१
रसिअजण ५।१०१
रसिअजण ६।१०१
रसिअ विअड्ढ (बह्मआरिणो) ५।५
राअविरुद्धं (बहुल्लस्स) ४।९६
रुन्दारविन्दमन्दिर ६।७४
रूअं अच्छीसु (बह्मगतिण्णो) २।३२
रूअं सिट्ठं चिअ ६।७३
रेहइ गलन्तकेस ५।४६
रेहन्ति कुमुअदल ६।६१
रोवन्ति व्व अरण्णे ५।९४
लङ्कालआणँ (अणुराअस्स) ४।११
लज्जा चत्ता सीलं ६।२४
लहुअन्ति (गोविन्दसामिस्स) ३।५५
लुम्बीओ अङ्गण (वत्सस्स) ४।२२
लोओ जूरइ जूरउ ६।२९
वअणे वअणम्मि (असोअस्स) ४।५६
वइविवर (उद्धवस्स) ३।५७
वक्कं को पुलट (मेहणाअस्स) २।६४
वङ्कच्छिपेच्छ (वप्पसामिणो २।७४
वज्जपडणा (कण्णस्स) १।५४
वणदवमसि (हालस्स) २।१७
वणअघअलिप्पमुहिं ६।१९
वण्णक्कमरहिअस्स ७।१२
वण्णन्तीहिं तुह (सङ्करसत्तिस्स) ४।५०
वण्णवसिए विअत्थसि ५।७८
वन्दीअ णिहुअ (हालस्स) २।१८
वसइ जहिं (कित्तिराअस्स) २।३५
वसणम्मि (प्रणालस्स) ४।८०
वाआइ किं भणिज्जउ ६।७१
वाउद्धअसिचअ ६।७
वाउलिआपरि ७।२६
वाउव्वेल्लिअसाउलि ७।५
वाएरिएण (पालितस्स) २।७६
वावारविसंवाअं ७।१६
वासारत्ते उण्णअ ५।३४
वाहरउ मं (कुसुमराअस्स)[2] २।३१
वाहित्ता पडिवअणं (रोलएवस्स) ५।१६
वाहिव्व वेज्ज (वामएवस्स) ४।६३
वाहोहभरिअ ६।१८
विक्किणइ माह (हालस्स) ३।३८
विज्जाविज्जइ (अणुराअस्स) ५।७
विज्झारुहणालावं ७।३१
विण्णाणगुण (सवरसत्तिस्स?) ३।६७
विरहकरवत्त (साहिल्लस्स) २।५३
विरहाणलो (अमिअस्स) १।४३
विरहेण मन्दरेण ५।७५
विरहे विसं व (हालस्स) ३।३५
विवरीअसुरअलेहल ७।५४
विसमट्ठिअपिक्के ६।९५
वीसत्थहसिअपरि ७।६
वेविरसिण्ण (अन्धस्स) ३।४४

१. 'पोटस्स' वे. २. 'सोमराजस्स' वे.

